# भवानी-नाम-सहस्त्र-स्तुतिः

( नामावली सहित )

संशोधित तथा सम्पादित
पण्डित जानकीनाथ कौल "कमल"

ॐ

# ॥ भवानीनामसहस्रस्तुतिः ॥

(नामावली सहित)

आशीर्वाद
पण्डित रघुनाथ कोकिल

संशोधित तथा सम्पादित
पण्डित जानकीनाथ कौल "कमल"

प्रकाशक:
मन्त्री, श्री रामकृष्ण आश्रम, शिवालय
करण नगर, श्रीनगर (काश्मीर)
190010

प्रकाशक
मन्त्री
श्रीरामकृष्ण आश्रम,
शिवालय, करणनगर, श्रीनगर (कश्मीर)—१९००१०


संस्करण—अक्तूबर, १९९४

प्राप्तिस्थान :—
१. ईश्वर आश्रम ट्रस्ट, २, महेन्द्रनगर, जम्मू-२
२. स्वामी मस्त बब आश्रम, पटोली, जम्मू-७
३. UTPAL PUBLICATION, R-22 Khaneja Complex, Main Market, Shakarpur, DELHI-92

# प्रकाशक का वक्तव्य

श्रीरामकृष्ण आश्रम, श्रीनगर द्वारा प्रकाशित *भवानीनामसहस्रस्तुति* (चूडामणि ग्रन्थावली नं॰ २) का आङ्गलभाषा में अनुवाद तथा व्याख्या की प्रस्तावना में भगवती त्रिपुरसुन्दरी के अनन्य भक्त श्रीरघुनाथ कोकिल ने लिखा है— "काश्मीरी पण्डित जनता श्रीभवानीनामसहस्रस्तुति के पाठ और इसकी नामावली से हवन यज्ञ आदि रचाने में प्राचीन काल से अपार श्रद्धा रखती आई है। इस कारण आज तक इसके मूल पाठ के कई संस्करण प्रकाशित हुए हैं। परन्तु उन संस्करणों में कहीं कहीं पाठ-भेद के अतिरिक्त विशेष त्रुटियाँ भी रह गई हैं।"

श्रीजानकीनाथ कौल ने महामहिम पं॰ साहिब कौल के *देवीनामविलास* के आधार पर इस सहस्रनाम का मूल पाठ बड़े परिश्रम से शुद्ध किया है।

अनुभवी महानुभाव कहते आये हैं कि इस स्तवराज के पाठ मात्र से ही त्रिविधताप दूर होते हैं; फिर यदि शुद्धचित्त से यथाविधि पाठ हो तो सर्वरोगनिवृत्ति और कार्यसिद्धि होती है। तीनों मल जो तपस्या से दूर नहीं होने पाते वे इन मन्त्ररूप नामों के केवल पाठमात्र से ही धुल जाते हैं और श्रद्धा-भक्तिपूर्वक पाठ करते रहने से कुण्डलिनी-जागरण हो सकता है।

अतः हम ने परिश्रमपूर्वक इस स्तुति को भक्तजनों के दैनिक पाठ के लिए प्रकाशित किया। आशा करते हैं कि इस संस्करण से सर्व-साधारण को लाभ होगा और हमें सन्तोष मिलेगा।

श्रीनगर
ज्येष्टाष्टमी

ब्रजनाथ कौल
मन्त्री

## विषय-सूची


| नाम | पृष्ठ |
|---|---|
| १. विज्ञप्ति | |
| २. भवानीनाम-सहस्र-स्तुतिः | १ |
| ३. भवानी-नामावली | ४६ |
| ४. श्री इन्द्राक्षी-स्तोत्रम् | ८६ |
| ५. देवी-स्तुतिः (श्रीमदाद्य शंकराचार्य) | ६४ |
| ६. अम्बिका-स्तुतिः (श्रीमदभिनवगुप्ताचार्य) | ६६ |
| ७. उपनिषद् - पाठ | १०० |

# विज्ञप्ति

'भवानीनामसहस्रस्तुतिः' का माहात्म्य इतना गम्भीर और गहन है कि भगवान् शिव ने इसका रहस्य अपने प्रिय पुत्र षण्मुख कुमार जी को भी नहीं बताया था —'स्कन्दस्याऽपि च यद्गोप्यं रहस्यं'। परन्तु तीव्रातितीव्र अभेद भक्तिसम्पन्न अपने प्रिय शिष्य नन्दिकेश्वर को बता दिया। वास्तव में भगवत्-रहस्य किसी अलौकिक रूप में

सद्गुरु के कृपाकटाक्ष द्वारा ही किसी प्राणी के हृदय में एवमेव खुलता है। तभी पराशक्ति भगवती पार्वती के विकसित सौन्दर्य रूप शक्तिपात से परमशिव रूप प्रकाश का आभास होने लगता है। भगवती का मातृवात्सल्य अपार होकर भी अनुभवगम्य है। यही मातृपूजा का रहस्य है।

मूल पाठ को प्राचीन पाण्डुलिपियों तथा मुद्रित संस्करणों के आधार पर काश्मीर के भक्तप्रवर पं० रघुनाथ कोकिल, पंजाब विश्वविद्यालय के महामहोपाध्याय डा० शशिधर तथा अन्य महानुभावों से परामर्श लेकर संशोधित किया गया है ताकि इस स्तवराज

का नित्य पाठ करने वाले भक्तजन को आत्म सन्तोष मिले। विज्ञजन का मत है कि इस स्तुतिः का एक एक शब्द आत्मोल्लास का विकास करने वाला एक एक मन्त्र है। तदनुसार नामावलिः भी साथ में दी है। साथ में श्री इन्द्राक्षीस्तोत्र, देवीस्तुतिः तथा अम्बिका स्तुतिः जोड दिये हैं।

जम्मू-तवी।
ज्येष्टाष्टमी, १९९३.

ज. न. क.
'कमल'

ॐ

# अथ भवानीनामसहस्रस्तुतिः

ॐ श्री गणेशाय नमः ॥ॐ नमो भवान्यै॥

ॐ शङ्खत्रिशूलशरचापकरां त्रिनेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितामसुरसिद्धनुतां च दुर्गां
दूर्वानिभां दुरितदुःखहरां नमामि ॥१॥
अकुलकुलपतन्ती चक्रमध्ये स्फुरन्ती ।

मधुरमधुपिवन्ती कण्टकान्भक्षयन्ती।
दुरितमपहरन्ती साधकान्पोषयन्ती
जयति जगति देवी सुन्दरी क्रीडयन्ती ॥२॥
चतुर्भुजामेकवक्त्रां पूर्णेन्दुवदनप्रभाम् ।
खड्गशक्तिधरां देवीं वरदाभयपाणिकाम् ॥३॥
प्रेतसंस्थां महारौद्रीं भुजगेनोपवीतिनीम् ।
भवानीं कालसंहारबद्धमुद्राविभूषिताम् ॥४॥
जगत्स्थितिकरीं ब्रह्मविष्णुरुद्रादिभिः सुरैः ।
स्तुतां तां परमेशानीं नौम्यहं विघ्नहारिणीम् ॥५॥

## ॐ नमो भवान्यै ॥

कैलासशिखरे रम्ये देवदेवं महेश्वरम् ।
ध्यानोपरतमासीनं प्रसन्नमुखपङ्कजम् ॥६॥
सुरासुरशिरोरत्नरञ्जिताङ्घ्रियुगं प्रभुम् ।
प्रणम्य शिरसा नन्दी बद्धाञ्जलिरभाषत ॥७॥

### श्रीनन्दिकेश्वर उवाच

देवदेव जगन्नाथ संशयोस्ति महान्मम ।
रहस्यमेकमिच्छामि प्रष्टुं त्वां भक्तवत्सलम्[१] ॥८॥

१. पाठान्तर — भक्तिवत्सल

देवतायास्त्वया कस्याः स्तोत्रमेतद्दिवानिशम् ।
पठ्यतेऽविरतं नाथ ! त्वत्तः किमपरं परम् ॥९॥
इति पृष्टस्तदा देवो नन्दिकेन जगद्गुरुः ।
प्रोवाच भगवानेको विकसन्नेत्रपङ्कजः ॥१०॥

**श्रीभगवानुवाच**

साधु साधु गणश्रेष्ठ पृष्टवानसि मां च यत्।
स्कन्दस्यापि च यद्गोप्यं रहस्यं कथयामि तत्॥११॥

पुरा कल्पक्षये लोकान्सिसृक्षुर्मूढचेतसा।
गुणत्रयमयी शक्तिर्मूलप्रकृतिसंज्ञिता ॥१२॥
तस्यामहं समुत्पन्नस्तत्त्वैस्तैर्महदादिभिः।
चेतनेति ततः शक्तिर्मां काप्यालिङ्ग्य तस्थुषी ॥१३॥
हेतुः संकल्पजालस्य मनोधिष्ठायिनी शुभा।
इच्छेति परमा शक्तिरुन्मिमील ततः परम् ॥१४॥
ततो वागिति विख्याता शक्तिः शब्दमयी परा।
प्रादुरासीज्जगन्माता वेदमाता सरस्वती ॥१५॥

ब्राह्मी च वैष्णवी रौद्री कौमारी पार्वती शिवा।
सिद्धिदा बुद्धिदा शान्ता सर्वमङ्गलदायिनी ॥१६॥
तयैतत्सृज्यते विश्वमनाधारं च धार्यते।
तयैतत्पाल्यते सर्वं तस्यामेव प्रलीयते ॥१७॥
अर्चिता प्रणता ध्याता सर्वभावविनिश्चिता।
आराधिता स्तुता सैव सर्वसिद्धिप्रदायिनी॥१८॥
तस्या अनुग्रहादेव तामेव स्तुतवानहम्
सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः॥१९॥

स्तवेनानेन सन्तुष्टा मामेव प्रविवेश सा।
तदारभ्य मया प्राप्तमैश्वरं पदमुत्तमम्॥२०॥
तत्प्रभावान्मया सृष्टं जगदेतत् चराचरम्।
ससुरासुरगन्धर्वयक्षराक्षसमानवम् ॥२१॥
सपन्नगं साब्धिकं च सशैलवनकाननम्।
सराशिग्रहनक्षत्रं पंचभूतगुणान्वितम् ॥२२॥
नन्दिन्नामसहस्रेण स्तवेनानेन सर्वदा।
स्तुवे परापरां शक्तिं ममानुग्रहकारिणीम् ॥२३॥

इत्युक्तोपरतं देवं चराचरगुरुं विभुम्।
प्रणम्य शिरसा नन्दी प्रोवाच परमेश्वरम् ॥२४॥

**श्रीनन्दिकेश्वर उवाच**

भगवन्देवदेवेश लोकनाथ जगत्पते।
भक्तोऽस्मि तव दासोऽस्मि प्रसादः क्रियतां मयि ॥२५॥
देव्याः स्तवमिमं पुण्यं दुर्लभं यत्सुरैरपि।
श्रोतुमिच्छाम्यहं देव प्रभावमपि चास्य तु ॥२६॥

## श्रीभगवानुवाच॥

शृणु नन्दिन्महाभाग स्तवराजमिमं शुभम्।
सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम् ॥२७॥
शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः ।
त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्तवः ॥२८॥

अस्य श्रीभवानीनामसहस्रस्तवराजस्य, महादेवऋषिः, अनुष्टुप्छन्दः, आद्या शक्तिः, भगवती भवानी देवता, ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थे, सकलकामना सिद्ध्यर्थे पाठे/ होमे विनियोगः॥

अथ करन्यासः

ॐ एकवीरायै अङ्गुष्ठाभ्यां नमः ।

ॐ महामायायै तर्जनीभ्यां नमः ।

ॐ पार्वत्यै मध्यमाभ्यां नमः ।

ॐ गिरीशप्रियायै अनामिकाभ्यां नमः ।

ॐ गौर्यै कनिष्ठिकाभ्यां नमः ।

ॐ करालिन्यै करतलकरपृष्ठाभ्यां नमः ॥

## अथ षडङ्गन्यासः

ॐ एकवीरायै हृदयाय नमः ।
ॐ महामायै शिरसे स्वाहा ।
ॐ पार्वत्यै शिखायै वषट् ।
ॐ गिरीश प्रियायै कवचायहुम् ।
ॐ गौर्यै नेत्राभ्यां वौषट् ।
ॐ करालिन्यै अस्त्रायफट् ॥

## ततः प्राणायामः

## अथ ध्यानम्

अर्धेन्दुमौलिममलाममराभिवन्द्याम-
म्भोजपाशसृणिरक्तकपालहस्ताम् ।
रक्ताङ्गरागरशनाभरणां त्रिनेत्रां
ध्याये शिवस्य वनितां मधुविह्वलाङ्गीम् [१] ॥
बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ।
पाशांकुशशरांश्चापं धारयन्तीं शिवां भजे ॥

ॐ बीजत्रयायै विद्महे, तत्प्रधानायै धीमहि, तन्नः शक्तिः प्रचोदयात् ॥ ३ ॥

मूलम्—ॐ श्रीं श्रीं ॐ ॐ ह्रीं श्रीं श्रीं भवानि हुं फट् स्वाहा ॥ १०८ ॥

१. पाठान्तर —मदविह्वलाङ्गीम्।

## श्री ईश्वर उवाच

ॐ महाविद्या जगन्माता महालक्ष्मीः शिवप्रिया ।
विष्णुमाया शुभा शान्ता सिद्धा सिद्धसरस्वती ॥१॥
क्षमा कान्तिः प्रभा ज्योत्स्ना पार्वती सर्वमङ्गला ।
हिङ्गुला चण्डिका दान्ता पद्मा लक्ष्मीर्हरिप्रिया ॥२॥
त्रिपुरा नन्दिनी नन्दा सुनन्दा सुरवन्दिता ।
यज्ञविद्या महामाया वेदमाता सुधा धृतिः ॥३॥

प्रीतिर्प्रथा प्रसिद्धा च मृडानी विन्ध्यवासिनी ।
सिद्धविद्या महाशक्तिः पृथ्वी नारदसेविता ॥४॥
पुरुहूतप्रिया कान्ता कामिनी पद्मलोचना ।
प्रह्लादिनी महामाता दुर्गा दुर्गतिनाशिनी ॥५॥
ज्वालामुखी सुगोत्रा च ज्योतिः कुमुदहासिनी।
दुर्गमा दुर्लभा विद्या स्वर्गतिः पुरवासिनी ॥६॥
अपर्णा शाम्बरीमाया मदिरा मृदुहासिनी ।
कुलवागीश्वरी नित्या नित्यक्लिन्ना कृशोदरी ॥७॥

कामेश्वरी च नीला च भीरुण्डा वह्निवासिनी ।
लम्बोदरी महाकाली विद्याविद्येश्वरी तथा ॥८॥
नरेश्वरी च सत्या च सर्वसौभाग्यवर्धिनी ।
संकर्षणी नारसिंही वैष्णवी च महोदरी ॥९॥
कात्यायनी च चम्पा च सर्व सम्पत्तिकारिणी ।
नारायणी महानिद्रा योगनिद्रा प्रभावती ॥१०॥
प्रज्ञापारमिता प्रज्ञा तारा मधुमती मधुः ।
क्षीरार्णवसुधाहारा कालिका सिंहवाहिनी [१]॥११॥

१. पाठान्तर — सिंहवाहना

ओंकारा वसुधाकारा चेतना कोपनाकृतिः ।
अर्धबिन्दुधरा धारा विश्वमाता कलावती ॥१२॥
पद्मावती सुवस्त्रा च प्रबुद्धा च सरस्वती ।
कुण्डासना जगद्धात्री बुद्धमाता जिनेश्वरी ॥१३॥
जिनमाता जिनेन्द्रा च शारदा हंसवाहना ।
राज्यलक्ष्मीर्वषट्कारा सुधाकारा सुधात्मिका ॥१४॥
राज्यनीतिस्त्रयी वार्ता दण्डनीतिः क्रियावती ।
सद्भूतिस्तारिणी श्रद्धा सद्गतिः सत्परायणा ॥१५॥

सिन्धुर्मन्दाकिनी गंगा यमुना च सरस्वती ।
गोदावरी विपाशा च कावेरी च शतद्रुका [१] ॥१६॥
सरयूश्चन्द्रभागा च कौशिकी गण्डकी शुचिः।
नर्मदा कर्मनाशा च चर्मण्वत्यथदेविका ॥१७॥
वेत्रवती वितस्ता च वरदा नरवाहना ।
सती पतिव्रता साध्वी सुचक्षुः कुण्डवासिनी ॥१८॥
एकचक्षुः सहस्राक्षी सुश्रोणिर्भगमालिनी ।
सेना श्रेणिः पताका च सुव्यूहा युद्धकांक्षिणी ॥१९॥

१. पाठान्तर—शतह्रदा

पताकिनी दयारम्भा विपञ्चीपञ्चमप्रिया ।
परापरकलाकान्ता त्रिशक्तिर्मोक्षदायिनी ॥२०॥
ऐन्द्री माहेश्वरी ब्राह्मी कौमारी कुलवासिनी ।
इच्छा भगवती शक्तिः कामधेनुः कृपावती ॥२१॥
वज्रायुधा वज्रहस्ता चण्डी चण्डपराक्रमा।
गौरी सुवर्णवर्णा च स्थितिसंहारकारिणी॥२२॥
एकानेका महेज्या च शतबाहुर्महाभुजा।
भुजङ्गभूषणा भूषा षट्चक्रक्रमवासिनी॥२३॥

षट्चक्रभेदिनी श्यामा कायस्था कायवर्जिता ।
सुस्मिता सुमुखी क्षामा मूलप्रकृतिरीश्वरी ॥२४॥
अजा च बहुवर्णा च पुरुषार्थप्रवर्तिनी ।
रक्ता नीला सिता श्यामा कृष्णा पीता च कर्बुरा ॥२५॥
क्षुधा तृष्णा जरावृद्धा तरुणी करुणालया ।
कला काष्टा मुहूर्ता च निमेषा कालरूपिणी ॥२६॥
सुकर्ण[1]रसना नासा चक्षुः स्पर्शवती रसा ।
गन्धप्रिया सुगन्धा च सुस्पर्शा च मनोगतिः ॥२७॥

१. पाठान्तर—सुवर्ण

मृगनाभिर्मृगाक्षी च कर्पूरामोदधारिणी ।
पद्मयोनिः सुकेशी च सुलिङ्गा भगरूपिणी ॥२८॥
योनिमुद्रा महामुद्रा खेचरी खगगामिनी ।
मधुश्रीर्माधवीवल्ली मधुमत्ता मदोद्धता ॥२९॥
मातङ्गी शुकहस्ता च पुष्पबाणेक्षुचापिनी ।
रक्ताम्बरधरा क्षीवा रक्तपुष्पावतंसिनी ॥३०॥
शुभ्राम्बरधरा धीरा महाश्वेता वसुप्रिया ।
सुवेणिः पद्महस्ता च मुक्ताहारविभूषणा ॥३१॥

कर्पूरामोदनिःश्ववासा पद्मिनी पद्ममन्दिरा।
खड्गिनी चक्रहस्ता च भुसुण्डी [१] परिघायुधा॥३२॥
चापिनी पाशहस्ता च त्रिशूलवरधारिनी।
सुबाणा शक्तिहस्ता च मयूरवरवाहना॥३३॥
वरायुधधरा वीरा वीरपानमदोत्कटा ।
वसुधा वसुधारा च जया शाकम्भरी शिवा॥३४॥
विजया च जयन्ती च सुस्तनी शत्रुनाशिनी।
अन्तर्वत्नी वेदशक्तिर्वरदा वरधारिणी ॥ ३५॥

१. पाठा. — भुशुण्डी

शीतला च सुशीला च बालग्रहविनाशिनी।
कुमारी च सुपर्वा च कामाख्या कामवन्दिता॥ ३६ ॥
जालन्धरधराऽनन्ता कामरूपनिवासिनी।
कामबीजवती सत्या सत्यधर्मपरायणा॥ ३७॥
स्थूलमार्गस्थिता सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी।
षट्कोणा च त्रिकोणा च त्रिनेत्रा त्रिपुरसुन्दरी ॥ ३८ ॥
वृषप्रिया वृषारूढा महिषासुरघातिनी।
सुम्भदर्पहरा दीप्ता दीप्तपावकसन्निभा॥ ३९ ॥

कपालभूषणा काली कपालमालभारिणी।
कपालकुण्डला दीर्घा शिवादूती घनध्वनिः ॥४०॥
सिद्धिदा बुद्धिदा नित्या सत्यमार्गप्रबोधिनी ।
कम्बुग्रीवा वसुमती छत्रच्छायाकृतालया ॥४१॥
जगद्गर्भा कुण्डलिनी भुजगाकारशायिनी ।
प्रोल्लसत्सप्तपद्मा च नाभिनालमृणालिनी ॥४२॥
मूलाधारा निराकारा वह्निकुण्डकृतालया ।
वायुकुण्डसुखासीना निराधारा निराश्रया ॥४३॥

श्वासोच्छ्वासगतिर्जीवा ग्राहिणी वह्निसंश्रया ।
वह्नितन्तुसमुत्थाना [१] षड्रसास्वादलोलुपा ॥४४॥
तपस्विनी तपःसिद्धिः तापसी च तपः प्रिया ।
तपोनिष्ठा तपोयुक्ता तपसः सिद्धिदायिनी ॥४५॥
सप्तधातुमयीमूर्तिः सप्तधात्वन्तराश्रया ।
देहपुष्टिर्मनस्तुष्टिरन्नपुष्टिर्बलोद्धता ॥४६॥
ओषधि [२] वैद्यमाता च द्रव्यशक्तिः प्रभाविनी ।
वैद्या वैद्यचिकित्सा च सुपथ्या रोगनाशिनी ॥४७॥

१. पाठान्तर —वल्लीतन्तुसमुत्थाना
२. पाठान्तर —औषधिः

मृगया मृगमांसादा मृगत्वङ्मृगलोचना ।
वागुरा बन्धरूपा च वधरूपा वधोद्धता ॥४८॥
बन्दी बन्दिस्तुताकारा काराबन्धविमोचनी ।
शृङ्खला खलहा विद्युद्दृढबन्धविमोचनी ॥४९॥
अम्बिकाऽम्बालिकाचाम्बा स्वक्षा साधुजनार्चिता ।
कौलिकी कुलविद्या च सुकुला कुलपूजिता ॥५०॥
कालचक्रभ्रमा भ्रान्ता विभ्रमा भ्रमनाशिनी ।
वात्याली मेघमाला च सुवृष्टिः सस्यवर्द्धिनी ॥५१॥

अकारा च इकारा च उकारैकाररूपिणी ।
ह्रींकारी बीजरूपा च क्लींकाराम्बरवासिनी ॥५२॥
सर्वाक्षरमयीशक्तिरक्षरा वर्णमालिनी ।
सिन्दूरारुणवक्त्रा च सिन्दूरतिलकप्रिया ॥५३॥
वश्या च वश्यबीजा च लोकवश्यविभाविनी ।
नृपवश्या नृपैः सेव्या नृपवश्यकरी क्रिया [१] ॥५४॥
महिषी नृपमान्या च नृमान्या नृपनन्दिनी ।
नृपधर्ममयी धन्या धनधान्यविवर्द्धिनी ॥५५॥

१. पाठान्तर —प्रिया

चतुर्वर्णमयीमूर्तिश्चतुर्वर्णैश्चपूजिता ।
सर्वधर्ममयीसिद्धिश्चतुराश्रमवासिनी ॥५६॥
ब्राह्मणी क्षत्रिया वैश्या शूद्राचावरवर्णजा।
वेदमार्गरता यज्ञा वेदविश्वविभाविनी॥५७॥
अस्त्रशस्त्रमयीविद्या वरशस्त्रास्त्रधारिणी।
सुमेधा सत्यमेधा च भद्रकाल्यऽपराजिता॥५८॥
गायत्री सत्कृतिः सन्ध्या सावित्री त्रिपदाश्रया।
त्रिसन्ध्या त्रिपदी धात्री सुपर्वा सामगायनी॥५९॥

पाञ्चाली बालिका बाला बालक्रीडा सनातनी।
गर्भाधारधरा शून्या गर्भाशयनिवासिनी॥६०॥
सुरारिघातिनीकृत्या पूतना च तिलोत्तमा।
लज्जा रसवती नन्दा भवानी पापनाशिनी॥६१॥
पट्टाम्बरधरा गीतिः सुगीतिर्ज्ञानलोचना।
सप्तस्वरमयीतन्त्री षड्जमध्यमधैवता ॥६२॥
मूर्च्छनाग्रामसंस्थाना स्वस्था स्वस्थानवासिनी।
अट्टाट्टहासिनी प्रेता प्रेतासननिवासिनी ॥६३॥

नृत्तगीतप्रिया[१] ऽकामा तुष्टिदा पुष्टिदाक्षया।
निष्ठासत्यप्रिया प्रज्ञा लोकेशी च सुरोत्तमा॥६४॥
सविषा ज्वालिनी ज्वाला विषमोहार्तिनाशिनी।
विषारिर्नागदमनी कुरुकुल्लाऽमृतोद्भवा॥६५॥
भूतभीतिहरारक्षा भूतावेशविनाशिनी ।
रक्षोघ्नी राक्षसी रात्रिर्दीर्घनिद्रा दिवागतिः ॥६६॥
चन्द्रिका चन्द्रकान्तिश्च सूर्यकान्तिर्निशाचरी ।
डाकिनी शाकिनी शिष्या हाकिनी चक्रवाकिनी ॥६७॥

१. पाठान्तर —गीतनृत्यप्रिया

सितासितप्रिया स्वङ्गा सकला[१] वनदेवता ।
गुरुरूपधरा गुर्वी मृत्युर्मारी विशारदा ॥६८॥
महामारी विनिद्रा च तन्द्रा मृत्युविनाशिनी ।
चन्द्रमण्डलसंकाशा चन्द्रमण्डलवासिनी ॥६९॥
अणिमादिगुणोपेता सुस्पृहा कामरूपिणी ।
अष्टसिद्धिप्रदा प्रौढा दुष्टदानवघातिनी ॥७०॥
अनादिनिधनापुष्टिश्चतुर्बाहुर्चतुर्मुखी ।
चतुः समुद्रशयना चतुर्वर्गफलप्रदा॥७१॥

१. पाठान्तर —सुकुला

काशपुष्पप्रतीकाशा शरत्कुमुदलोचना।
भूता भव्या भविष्या च शैलजा शैलवासिनी॥७२॥
वाममार्गरता वामा शिववामाङ्गवासिनी।
वामाचारप्रिया तुष्टा लोपामुद्रा प्रबोधिनी॥७३॥
भूतात्मा परमात्मा च भूतभाविविभाविनी।
मङ्गला च सुशीला च परमार्थप्रबोधिका ॥७४॥
दक्षिणा दक्षिणामूर्तिः सुदक्षिणा हरिप्रिया।
योगिनी योगयुक्ता च योगाङ्गा ध्यानशालिनी॥७५॥

योगपट्टधरा मुक्ता मुक्तानां परमागतिः ।
नारसिंही सुजन्मा च त्रिवर्गफलदायिनी॥७६॥
धर्मदा धनदा चैव कामदा मोक्षदा द्युतिः।
साक्षिणी क्षणदा दक्षा दक्षजा कोटिरूपिणी ॥७७॥
क्रतुः कात्यायनी स्वच्छा स्वच्छन्दा च कविप्रिया।
सत्यागमा बहिःस्था च काव्यशक्तिः कवित्वदा॥७८॥
मेनापुत्री सती माता मैनाकभगिनी तडित् ।
सौदामिनी स्वधामा च सुधामा धामशालिनी॥७९॥

सौभाग्यदायिनीद्यौश्च सुभगा द्युतिवर्द्धिनी।
श्रीः कृत्तिवसना चैव कङ्काली कलिनाशिनी॥८०॥
रक्तबीजवधोद्दृप्ता सुतन्तुर्बीजसन्ततिः।
जगज्जीवा जगद्बीजा जगत्त्रयहितैषिणी॥८१॥
चामीकररुचिश्चान्द्रीसाक्षयाषोडशीकला।
यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता॥८२॥
चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी।
चामुण्डा मुण्डहस्ता च चण्डमुण्डवधोद्धुरा[1]॥८३॥

१. पाठान्तर —चण्डमुण्डवद्योध्यता।

अष्टम्येकादशी पूर्णा नवमी च चतुर्दशी।
अमा कलशहस्ता च पूर्णकुम्भधरा धरा ॥८४॥
अभीरुर्भैरवी भीमा भीरा त्रिपुरभैरवी।
महारुण्डा च रौद्री च महाभैरवपूजिता ॥८५॥
निर्मुण्डा हस्तिनी चण्डा करालदशनानना।
कराला विकराला च घोरघुर्घुरनादिनी ॥८६॥
रक्तदन्तोर्ध्वकेशी च बन्धूककुसुमारुणा।
कादम्बरी पटासा च काश्मीरी कुङ्कुमप्रिया ॥८७॥

क्षान्तिर्बहुसुवर्णा च रतिर्बहुसुवर्णदा।
मातङ्गिनी वरारोहा मत्तमातङ्गगामिनी ॥८८॥
हिंसा हंसगतिर्हंसी हंसोज्ज्वलशिरोरुहा।
पूर्णचन्द्रमुखी श्यामा स्मितास्या श्यामकुण्डला[१] ॥८९॥
मषी च लेखिनी लेख्या सुलेखा लेखकप्रिया ।
शङ्खिनी शङ्खहस्ता च जलस्था जलदेवता ॥९०॥
कुरुक्षेत्रावनिः काशी मथुरा काञ्च्यवन्तिका ।
अयोध्या द्वारका माया तीर्था तीर्थकरप्रिया ॥९१॥

१. पाठान्तर —श्यामकुन्तला

त्रिपुष्कराऽप्रमेया च कोशस्था कोशवासिनी ।
कौशिकी तु कुशावर्ता कौशाम्बी कोशवर्द्धिनी ॥९२॥
कोशदा पद्मकोशाक्षीकुसुमा कुसुमप्रिया ।
तोतुला च तुलाकोटिः कूटस्था कोटराश्रया ॥९३॥
स्वयम्भूश्च सुरूपा च स्वरूपा रूपवर्द्धिनी[१] ।
तेजस्विनी सुभिक्षा च बलदा बलदायिनी ॥९४॥
महाकोशी महावर्ता बुद्धिः सदसदात्मिका ।
महाग्रहहरा सौम्या विशोका शोकनाशिनी ॥९५॥

१. पाठान्तर —पुण्यवर्द्धिनी

सात्त्विकी सत्त्वसंस्था च राजसी च रजोवृता ।
तामसी च तमोयुक्ता गुणत्रयविभाविनी ॥९६॥
अव्यक्ता व्यक्तरूपा च वेदविद्या च शाम्भवी ।
शंकराकल्पिनीकल्पा मनःसंकल्पसन्ततिः ॥९७॥
सर्वलोकमयी शक्तिः सर्वश्रवणगोचरा ।
सर्वज्ञानवतीवाञ्छा सर्वतत्त्वानुबोधिनी ॥९८॥
जाग्रती च सुषुप्तिश्च स्वप्नावस्था तुरीयका ।
त्वरा मन्दगतिर्मन्दा मदिरामोदधारिणी ॥९९॥

पानभूमिः पानपात्रा पानदानकरोद्यता ।
आघूर्णा[१]रुणनेत्रा च किञ्चिदव्यक्तभाषिणी ॥१००॥
आशापूरा च दीक्षा च दक्षा दीक्षितपूजिता ।
नागवल्ली नागकन्या भोगिनी भोगवल्लभा ॥१०१॥
सर्वशास्त्रवती विद्या सुस्मृतिर्धर्मवादिनी।
श्रुतिः श्रुतिधरा ज्येष्ठा श्रेष्ठा पातालवासिनी ॥१०२॥
मीमांसा तर्कविद्या च सुभक्तिर्भक्तवत्सला ।
सुनाभिर्यातना जातिर्गम्भीरा भाववर्जिता॥१०३॥

१. पाठान्तर —अघूर्णा

नागपाशधरामूर्तिरगाधा नागकुण्डला।
सुचक्रा चक्रमध्यस्था चक्रकोणनिवासिनी ॥१०४॥
सर्वमन्त्रमयी विद्या सर्वमन्त्राक्षरावलिः ।
मधुस्त्रवा स्त्रवन्ती च भ्रामरी भ्रमरालका ॥१०५॥
मातृमण्डलमध्यस्था मातृमण्डलवासिनी ।
कुमारजननी क्रूरा सुमुखी ज्वरनाशिनी ॥१०६॥
अतीता विद्यमाना च भाविनी प्रीतिमञ्जरी ।
सर्वसौख्यवती युक्तिराहारपरिणामिनी ॥१०७॥

निदानं पञ्चभूतानां भवसागरतारिणी ।
अक्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता ॥१०८॥
रोहिणी भूमिगर्भा च कालभूः कालवर्तिनी ।
कलंकरहिता नारी चतुष्षष्ट्यभिधावती ॥१०९॥
जीर्णा च जीर्णवस्त्रा च नूतना नववल्लभा ।
अरजा[1] च रतिः प्रीतिः रतिरागविवर्द्धिनी ॥११०॥
पञ्चवातगतिर्भिन्ना पञ्चश्लेष्माशयाधरा ।
पञ्चपित्तवती शक्तिः पञ्चस्थानविबोधिनी ॥१११॥

१. पाठान्तर —अजरा

उदक्या च वृषस्यन्ती बहिः प्रस्रविणी त्र्यहम् ।
रजः शुक्रधरा शक्तिर्जरायुर्गर्भधारिणी ॥११२॥
त्रिकालज्ञा त्रिलिङ्गा च त्रिमूर्तिः त्रिपुरवासिनी ।
अरागा शिवतत्त्वा च कामतत्त्वानुरागिणी॥११३॥
प्राच्यवाची प्रतीचीदिक् उदीचीदिक् विदिग्दिशाम् ।
अहंकृतिरहंकारा बलिमाया बलिप्रिया ॥११४॥
स्रुक्स्रुवा सामिधेनी च सश्रद्धा श्राद्धदेवता ।
माता मातामही तृप्तिः पितृमाता पितामही ॥११५॥

स्नुषा दौहित्रिणी पुत्री पौत्री नप्त्री शिशुप्रिया ।
स्तनदा स्तनधारा च विश्वयोनिः स्तनन्धयी ॥११६॥
शिशूत्सङ्गधरा दोला दोलाक्रीडाभिनन्दिनी ।
उर्वशी कदली केका विशिखा शिखिनर्तिनी ॥११७॥
खट्वाङ्गधारिणी खट्वा बाणपुङ्खानुवर्तिनी ।
लक्ष्यप्राप्तिः कलाऽलक्ष्या लक्ष्या च शुभलक्षणा ॥११८॥
वर्तिनी सुपथाचारा परिखा च खनिर्वृतिः ।
प्राकारवलया वेला मर्यादा च महोदधौ ॥११९॥

पोषणीशोषणीशक्तिर्दीर्घकेशी सुलोमशा ।
ललिता मांसला तन्वी वेदवेदाङ्गधारिणी ॥१२०॥
नरासृक्पानमत्ता च नरमुण्डास्थिभूषणा ।
अक्षक्रीडारतिः शारी शारिका शुकभाषिणी ॥१२१॥
शाम्बरी गारुडीविद्या वारुणी वरुणार्चिता ।
वाराही मुण्डहस्ता च दंष्ट्रोद्धृतवसुन्धरा ॥१२२॥
मीनमूर्तिधरा मूर्त्ता वदन्या प्रतिमाश्रया ।
अमूर्ता निधिरूपा च सालिग्रामशिलाशुचिः[१] ॥१२३॥

१. पाठान्तर —शालिग्रामशिलाशुचिः ।

स्मृतिः संस्काररूपा च सुसंस्कारा च संस्कृतिः।
प्राकृता देशभाषा च गाथा गीतिः प्रहेलिका ॥१२४॥
इडा च पिङ्गला पिङ्गा सुषुम्णा सूर्यवाहिनी ।
शशिस्रवा च तालुस्था काकिन्यमृतजीविनी ॥१२५॥
अणुरूपा बृहद्रूपा लघुरूपा गुरुस्थिरा ।
स्थावरा जङ्गमा देवी कृतकर्मफलप्रदा ॥१२६॥
विषयाक्रान्तदेहा च निर्विशेषा जितेन्द्रिया ।
विश्वरूपा चिदानन्दा परब्रह्मप्रबोधिनी ॥१२७॥

निर्विकारा च निर्वैरा विरतिः सत्यवर्धिनी ।
पुरुषाज्ञा च भिन्ना च क्षान्तिः कैवल्यदायिनी ॥१२८॥
विविक्तसेविनी प्रज्ञाजनयित्री बहुश्रुतिः ।
निरीहा च समस्तैका सर्वलोकैकसेविता ॥१२९॥
सेवा सेवाप्रिया सेव्या सेवाफलविवर्द्धिनी ।
कलौ कल्किप्रिया काली दुष्टम्लेच्छविनाशिनी ॥१३०॥
प्रत्यञ्चा च धनुर्यष्टिः खड्‌गधारा दुरानतिः ।
अश्वप्लुतिश्च वल्गा च सृणिः सन्मत्तवारणा ॥१३१॥

वीरभूर्वीरमाता च वीरसूर्वीरनन्दिनी ।
जयश्रीर्जयदीक्षा च जयदा जयवर्द्धिनी ॥१३२॥
सौभाग्यसुभगाकारा सर्वसौभाग्यवर्द्धिनी ।
क्षेमङ्करी सिद्धिरूपा सत्कीर्तिः पथिदेवता ॥१३३॥
सर्वतीर्थमयीमूर्तिः सर्वदेवमयीप्रभा ।
सर्वसिद्धिप्रदाशक्तिः सर्वमङ्गलमङ्गला ॥१३४॥

# फलश्रुतिः

पुण्यं सहस्रनामेदमम्बाया रुद्रभाषितम् ।
चतुर्वर्गप्रदं सत्यं नन्दिकेन प्रकाशितम् ॥१३५॥
नातः परतरो मन्त्रो नातः परतरः स्तवः ।
नातः परतरा विद्या तीर्थं नातः परात्परम् ॥१३६॥
ते धन्याः कृतपुण्यास्ते त एव भुवि पूजिताः ।
एकभावं[1] मुदा नित्यं येर्चयन्ति महेश्वरीम् ॥१३७॥

१. पाठान्तर —एकवारं ।

देवतानां देवता या ब्रह्माद्यैर्या च पूजिता ।
भूयात्सा वरदा लोके साधूनां विश्वमङ्गला ॥१३८॥
एतामेव पुराराध्य विद्यां त्रिपुरभैरवीम् ।
त्रैलोक्यमोहनं रूपमकार्षीद्भगवद्धरिः ॥१३९॥

इति रुद्रयामले तन्त्रे नन्दिकेश्वरसंवादे महाप्रभावो भवानीनामसहस्रस्तवराजःसम्पूर्णः ॥

# अथ भवानीनामसहस्रस्तुतिः

## नामावलीः

### ध्यानम्

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ।
पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां भजे ॥

अर्धेन्दुमौलिममलाममराभिवन्द्या–
मम्भोजपाशसृणिरक्तकपालहस्ताम्।
रक्ताङ्गरागरशनाभरणां त्रिनेत्रां
ध्याये शिवस्य वनितां मधुविह्वलाङ्गीम्॥

ॐ महाविद्यायै स्वाहा। जगन्मात्रे० महालक्ष्म्यै० शिवप्रियायै० विष्णुमायायै० शुभायै० शान्तायै० सिद्धायै० सिद्धसरस्वत्यै० क्षमायै० कान्त्यै० प्रभायै० ज्योत्स्नायै० पार्वत्यै० सर्वमङ्गलायै० हिङ्गुलायै० चण्डिकायै० दान्तायै० पद्मायै० लक्ष्म्यै० हरिप्रियायै० त्रिपुरायै० नन्दिन्यै० नन्दायै० सुनन्दायै० सुरवन्दितायै० यज्ञविद्यायै० महामायायै० वेदमात्रे० सुधायै० धृत्यै० प्रीतये० प्रभायै० प्रसिद्धायै० मृडान्यै० विन्ध्यवासिन्यै० सिद्धविद्यायै० महाशक्त्यै० पृथ्व्यै० नारदसेवितायै० पुरहूतप्रियायै० कान्तायै०

कामिन्यै० पद्मलोचनायै० प्रह्लादिन्यै० महामात्रे० दुर्गायै०
दुर्गतिनाशिन्यै० ज्वालामुख्यै० सुगोत्रायै० ज्योतिषे०
कुमुदहासिन्यै० दुर्गमायै० दुर्लभायै० विद्यायै० स्वर्गतये०
पुरवासिन्यै० अपर्णायै० शाम्बरीमायायै० मदिरायै० मृदुहासिन्यै०
कुलवागीश्वर्यै० नित्यायै० नित्यक्लिन्नायै० कृशोदर्यै० कामेश्वर्यै०
नीलायै० भीरुण्डायै० वह्निवासिन्यै० लम्बोदर्यै० महाकाल्यै०
विद्याविद्येश्वर्यै० नरेश्वर्यै० सत्यायै० सर्वसौभाग्यवर्धिन्यै०
संकर्षण्यै० नारसिंह्यै०वैष्णव्यै० महोदर्यै० कात्यायन्यै० चम्पायै०
सर्वसम्पत्तिकारिण्यै० नारायण्यै० महानिद्रायै० योगनिद्रायै०

प्रभावत्यै० प्रज्ञापारमितायै० प्रज्ञायै० तारायै० मधुमत्यै० मधवे० क्षीरार्णवसुधाहारायै० कालिकायै० सिंहवाहिन्यै० ओंकारायै० वसुधाकारायै० चेतनायै० कोपनाकृत्यै० अर्धबिन्दुधरायै०

तेजोऽसि शुक्रमसि ज्योतिरसि धामासि प्रियन्देवानामनादृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि देवेभ्यस्त्वा यज्ञेभ्यो गृह्णामि

**ॐ धारायै स्वाहा ॥१००॥**

ध्यानम्

या कुन्देन्दुतुषारहारधवला या श्वेतपद्मासना
या वीणावरदण्डमण्डितकरा या शुभ्रवस्त्रान्विता।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा॥

ॐ विश्वमात्रे स्वाहा ।

कलावत्यै० पद्मावत्यै० सुवस्त्रायै० प्रबुद्धायै० सरस्वत्यै०
कुण्डासनायै० जगद्धात्र्यै० बुद्धमात्रे० जिनेश्वर्यै० जिनमात्रे०
जिनेन्द्रायै० शारदायै० हंसवाहनायै० राज्यलक्ष्म्यै० वषट्कारायै०

सुधाकारायै० सुधात्मिकायै० राजनीतये० त्रय्यै० वार्तायै०
दण्डनीतये० क्रियावत्यै० सद्भूतये० तारिण्यै० श्रद्धायै० सद्गतये०
सत्परायणायै० सिन्धवे० मन्दाकिन्यै० गङ्गायै० यमुनायै०
सरस्वत्यै० गोदावर्यै० विपाशायै० कावेर्यै० शतद्रुकायै० सरयवे०
चन्द्रभागायै० कौशिक्यै० गण्डक्यै० शुचये० नर्मदायै०
कर्मनाशायै० चर्मण्वत्यै० देविकायै० वेत्रवत्यै० वितस्तायै०
वरदायै० नरवाहनायै० सत्यै० पतिव्रतायै० साध्व्यै० सुचक्षुषे०
कुण्डवासिन्यै० एकचक्षुषे० सहस्राक्ष्यै० सुश्रोण्यै० भगमालिन्यै०
सेनायै० श्रेणये० पताकायै० सुव्यूहायै० युद्धकांक्षिण्यै०

पताकिन्यै० दयारम्भायै० विपञ्चीपञ्चमप्रियायै० परापरकलाकान्तायै० त्रिशक्तये० मोक्षदायिन्यै० ऐन्द्र्यै० माहेश्वर्यै० ब्राह्मयै० कौमार्यै० कुलवासिन्यै० इच्छायै० भगवत्यै० शक्तये० कामधेन्वे० कृपावत्यै० वज्रयुधायै० वज्रहस्तायै० चण्ड्यै० चण्डपराक्रमायै० गौर्यै० सुवर्णवर्णायै० स्थितिसंहारकारिण्यै० एकायै० अनेकायै० महेज्यायै० शतबाहवे० महाभुजायै० भुजङ्गभूषणायै० भूषायै० षट्चक्रक्रमवासिन्यै० षट्चक्रभेदिन्यै० श्यामायै० कायस्थायै० कायवर्जितायै०

तेजोऽसि ... ... ... धामासि०

**ॐ सुस्मितायै स्वाहा ॥२००॥**

ध्यानम्

या श्रीर्वेदमुखी तपः फलमुखी नित्यं च निद्रामुखी
नानारूपधरी सदा जयकरी विद्याधरी शंकरी ।
गौरी पीनपयोधरी रिपुहरी मालास्थिमालाधरी
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥

ॐ सुमुख्यै स्वाहा।

क्षामायै० मूलप्रकृतये० ईश्वर्यै० अजायै० बहुवर्णायै० पुरुषार्थप्रवर्तिन्यै० रक्तायै० नीलायै० सितायै० श्यामायै० कृष्णायै० पीतायै० कर्बुरायै० क्षुधायै० तृष्णायै० जरावृद्धायै० तरुण्यै० करुणालयायै० कलायै० काष्ठायै० मुहूर्तायै० निमेषायै० कालरूपिण्यै० सुकर्णरसनायै० नासायै० चक्षुषे० स्पर्शवत्यै० रसायै० गन्धप्रियायै० सुगन्धायै० सुस्पर्शायै० मनोगतये० मृगनाभये० मृगाक्ष्यै० कर्पूरामोदधारिन्यै० पद्मयोनये० सुकेश्यै० सुलिङ्गायै० भगरूपिण्यै० योनिमुद्रायै० महामुद्रायै० खेचर्यै०

खगगामिन्यै० मधुश्रियै० माधवीवल्लयै० मधुमत्तायै० मदोद्धतायै० मङ्गलायै० शुकहस्तायै० पुष्पबाणायै० इक्षुचापिण्यै० रक्ताम्बरधरायै० क्षीवायै० रक्तपुष्पावतंसिन्यै० शुभ्राम्बरधरायै० धीरायै० महाश्वेतायै० वसुप्रियायै० सुवेणयै० पद्महस्तायै० मुक्ताहारविभूषणायै० कर्पूरामोदनिःश्वासायै० पद्मिन्यै० पद्ममन्दिरायै० खड्गिन्यै० चक्रहस्तायै० भुसुण्ड्यै० परिघायुधायै० चापिन्यै० पाशहस्तायै० त्रिशूलवरधारिण्यै० सुबाणायै० शक्तिहस्तायै० मयूरवाहनायै० वरायुधधरायै० वीरायै०

वीरपानमदोत्कटायै० वसुधायै० वसुधारायै० जयायै० शाकम्भर्यै० शिवायै० विजयायै० जयन्त्यै० सुस्तन्यै० शत्रुनाशिन्यै० अन्तर्वत्न्यै० वेदशक्तये० वरदायै० वरधारिण्यै० शीतलायै० सुशीलायै० बालग्रहविनाशिन्यै० कुमार्यै० सुपर्वायै० कामाख्यायै० कामवन्दितायै० जालन्धरधरायै०

तेजोऽसि ... ... धामासि०

**ॐ अनन्तायै स्वाहा ॥३००॥**

## ध्यानम्

या देवी शिवकेशवादिजननी या वै जगद्रूपिणी
या ब्रह्मादिपिपीलिकान्तजनतानन्दैकसंदायिनी।
या पञ्चप्रणमन्निलिम्पनयनी या चित्कलामालिनी
सा पायात्परदेवता भगवती श्रीराजराजेश्वरी॥

ॐ कामरूपनिवासिन्यै स्वाहा।

कामबीजवत्यै० सत्यायै० सत्यधर्मपरायणायै० स्थूलमार्गस्थितायै० सूक्ष्मायै० सूक्ष्मबुद्धिप्रबोधिन्यै० षट्कोणायै० त्रिकोणायै० त्रिनेत्रायै० त्रिपुरसुन्दर्यै० वृषप्रियायै० वृषारूढायै०

महिषासुरघातिन्यै० सुम्भदर्पहरायै० दीप्तायै०
दीप्तपावकसन्निभायै० कपालभूषणायै० काल्यै०
कपालमालभारिण्यै० कपालकुण्डलायै० दीर्घायै० शिवादूत्यै०
घनध्वनये० सिद्धिदायै० बुद्धिदायै० नित्यायै० सत्यमार्गप्रबोधिन्यै०
कम्बुग्रीवायै० वसुमत्यै० छत्रच्छायाकृतालयायै० जगद्गर्भायै०
कुण्डलिन्यै० भुजगाकारशायिन्यै० प्रोल्लसत्सप्तपद्मायै०
नाभिनालमृणालिन्यै० मूलाधारायै० निराकारायै०
वह्निकुण्डकृतालयायै० वायुकुण्डसुखासीनायै० निराधारायै०
निराश्रयायै० श्वासोच्छ्वासगतये० जीवायै० ग्राहिण्यै०

वह्निसंश्रयायै० वह्नितन्तुसमुत्थानायै० षड्रसास्वादलोलुपायै० तपस्विन्यै० तपःसिद्धये० तापस्यै० तपःप्रियायै० तपोनिष्ठायै० तपोयुक्तायै० तपसःसिद्धिदायिन्यै० सप्तधातुमयीमूर्तये० सप्तधात्वन्तराश्रयायै० देहपुष्टये० मनःतुष्टये० अन्नपुष्टये० बलोद्धतायै० ओषधये० वैद्यमात्रे० द्रव्यशक्तये० प्रभाविन्यै० वैद्यायै० वैद्यचिकित्सायै० सुपथ्यायै० रोगनाशिन्यै० मृगयायै० मृगमांसादायै० मृगत्वचे० मृगलोचनायै० वागुरायै० बन्धरूपायै० वधरूपायै० वधोद्धतायै० वन्द्यै० वन्दिस्तुताकारायै०

कारावन्धविमोचन्यै० शृंखलायै० खलहायै० विद्युते० दृढबन्धविमोचन्यै० अम्बिकायै० अम्बालिकायै० अम्बायै० स्वक्षायै० साधुजनार्चितायै० कौलिक्यै० कुलविद्यायै० सुकुलायै० कुलपूजितायै० कालचक्रभ्रमायै० भ्रान्तायै० विभ्रमायै० भ्रमनाशिन्यै० वात्याल्यै० मेघमालायै०

तेजोऽसि ... ... धामासि०

**ॐ सुवृष्ट्यै स्वाहा ॥४००॥**

# ध्यानम्

बीजैः सप्तभिरुज्ज्वलाकृतिरसौ या सप्तसप्तिद्युतिः
सप्तर्षिप्रणताङ्घ्रिपङ्कजयुगा या सप्तलोकार्तिहृत्।
काश्मीरप्रवरेशमध्यनगरी प्रद्युम्नपीठेस्थिता
देवी सप्तकसंयुता भगवती श्री शारिका पातु नः ॥

ॐ सस्यवर्द्धिन्यै स्वाहा।

अकारायै० इकारायै० उकारायै० ऐकाररूपिण्यै० ह्रींकायै० बीजरूपायै० क्लींकारायै० अम्बरवासिन्यै० सर्वाक्षरमयीशक्तये० अक्षरायै० वर्णमालिन्यै० सिन्दूरारुणवक्त्रायै० सिन्दूरतिलकप्रियायै०

वश्यायै० वश्यबीजायै० लोकवश्यविभाविन्यै० नृपवश्यायै० नृपैः सेव्यायै० नृपवश्यकर्यै० क्रियायै० महिष्यै० नृपमान्यायै० नृमान्यायै० नृपनन्दिन्यै० नृपर्धममयै० धन्यायै० धनधान्यविवर्द्धिन्यै० चतुर्वर्णमयीमूर्तये० चतुर्वर्णैः सुपूजितायै० सर्वर्धममयीसिद्धये० चतुराश्रमवासिन्यै० ब्राह्मण्यै० क्षत्रियायै० वैश्यायै० शूद्रायै० अवरवर्णजायै० वेदमार्गरतायै० यज्ञायै० वेदविश्वविभाविन्यै० अस्त्रशस्त्रमयीविद्यायै० वरशस्त्रास्त्रधारिण्यै० सुमेधायै० सत्यमेधायै० भद्रकाल्यै० अपराजितायै० गायत्र्यै० सत्कृतये० सन्ध्यायै० सावित्र्यै० त्रिपदाश्रयायै० त्रिसन्ध्यायै०

त्रिपद्यै० धात्र्यै ० सुपर्यायै० सामगायन्यै० पाञ्चाल्यै० बालिकायै० बालायै० बालक्रीडायै० सनातन्यै० गर्भाधारधरायै० शून्यायै० गर्भाशयनिवासिन्यै० सुरारिघातिनीकृत्यायै० पूतनायै० तिलोत्तमायै० लज्जायै० रसवत्यै० नन्दायै० भवान्यै० पापनाशिन्यै० पट्टाम्बरधरायै० गीतये० सुगीतये० ज्ञानलोचनायै० सप्तस्वरमयीतन्त्र्यै० षड्जमध्यमधैवतायै० मूर्च्छनाग्रामसंस्थायै० स्वस्थायै० स्वस्थानवासिन्यै० अट्टाटहासिन्यै० प्रेतायै० प्रेतासननिवासिन्यै० नृत्तगीतप्रियायै० अकामायै० तुष्टिदायै० पुष्टिदायै० अक्षयायै० निष्ठायै० सत्यप्रियायै० प्रज्ञायै० लोकेश्यै०

सुरोत्तमायै० सविषायै० ज्वालिन्यै० ज्वालायै० विषमोहार्तिनाशिन्यै० विषारये०

तेजोऽसि ... ... धामासि०

**ॐ नागदमन्यै स्वाहा ॥५००॥**

ध्यानम्

भक्तानां सिद्धिधात्री नलिनयुगकरा श्वेतपद्मासनस्था
लक्ष्मीरूपा त्रिनेत्रा हिमकरवदना सर्वदैत्येन्द्रहर्त्री।
वागीशी सिद्धिकर्त्री सकलमुनिजनैः सेविता या भवानी।
नौम्यहं नौम्यहं त्वां हरिहरप्रणतां शारिकां नौमि नौमि॥

ॐ कुरुकुल्लायै स्वाहा

अमृतोद्भवायै० भूतभीतिहरारक्षायै० भूतावेशविनाशिन्यै० रक्षोघ्न्यै० राक्षस्यै० रात्रये० दीर्घनिद्रायै० दिवागतये० चन्द्रिकायै० चन्द्रकान्तये० सूर्यकान्तये० निशाचर्यै० डाकिन्यै० शाकिन्यै० शिष्यायै० हाकिन्यै० चक्रवाकिन्यै० सितासितप्रियायै० स्वङ्गायै० सकलायै० वनदेवतायै० गुरुरूपधरायै० गुर्व्यै० मृत्यवे० मार्यै० विशारदायै० महामार्यै० विनिद्रायै० तन्द्रायै० मृत्युविनाशिन्यै० चन्द्रमण्डलसंकाशायै० चन्द्रमण्डलवासिन्यै०

अणिमादिगुणोपेतायै० सुस्पृहायै० कामरूपिण्यै०
अष्टसिद्धिप्रदायै० प्रौढायै० दुष्टदानवघातिन्यै०
अनादिनिधनापुष्टये० चतुर्बाहवे० चतुर्मुख्यै० चतुःसमुद्रशयनायै०
चतुर्वर्गफलप्रदायै० काशपुष्पप्रतीकाशायै० शरत्कुमुदलोचनायै०
भूतायै० भव्यायै० भविष्यायै० शैलजायै० शैलवासिन्यै०
वाममार्गरतायै० वामायै० शिववामाङ्गवासिन्यै० वामाचारप्रियायै०
तुष्टायै० लोपामुद्रायै० प्रबोधिन्यै० भूतात्मने० परमात्मने०
भूतभाविविभाविन्यै० मङ्गलायै० सुशीलायै० परमार्थप्रबोधिकायै०
दक्षिणायै० दक्षिणामूर्तये० सुदक्षिणायै० हरिप्रियायै० योगिन्यै०

योगयुक्तायै० योगाङ्गायै० ध्यानशालिन्यै० योगपट्टधरायै० मुक्तायै० मुक्तानांपरमागतये० नारसिंह्यै० सुजन्मायै० त्रिवर्गफलदायिन्यै० धर्मदायै० धनदायै० कामदायै० मोक्षदायै० द्युतये० साक्षिण्यै० क्षणदायै० दक्षायै० दक्षजायै० कोटिरूपिण्यै० क्रतवे० कात्यायन्यै० स्वच्छायै० स्वच्छन्दायै० कविप्रियायै० सत्यागमायै० बहिःस्थायै० काव्यशक्तये० कवित्वदायै० मेनापुत्र्यै० सतीमात्रे०

तेजाऽसि... ...धामासि०

**ॐ मैनाकभगिन्यै स्वाहा ॥६००॥**

ध्यानम्

आरक्ताभां त्रिनेत्रां मणिमुकुटवतीं रत्नताटङ्करम्यां
हस्ताम्भोजैः सपाशाङ्कुशमदनधनुः सायकैर्विस्फुरन्तीम्।
आपीनोत्तुङ्गवक्षोरुहतटविलुठत्तारहारोज्ज्वलाङ्गीं
ध्यायाम्यम्भोरुहस्थामरुणविवसनामीश्वरीमीश्वराणाम्॥

ॐ तडिते स्वाहा।

सौदामिन्यै० स्वधामायै० सुधामायै० धामशलिन्यै० सौभाग्यदायिन्यै० दिवे० सुभगायै० द्युतिवर्द्धिन्यै० श्रियै० कृतिवसनायै० कङ्काल्यै० कलिनाशिन्यै० रक्तबीजवधोद्दृप्तायै० सुतन्तवे० बीजसन्ततये० जगज्जीवायै० जगद्बीजायै०

जगत्त्रयहितैषिण्यै० चामीकररुचये० चान्द्रीसाक्षयाषोडशीकलायै० यत्तत्पदानुबन्धायै० यक्षिण्यै० धनदार्चितायै० चित्रिण्यै० चित्रमायायै० विचित्रायै० भुवनेश्वर्यै० चामुण्डायै० मुण्डहस्तायै० चण्डमुण्डवधोद्धुरायै० अष्टम्यै० एकादश्यै० पूर्णायै० नवम्यै० चतुर्दश्यै० अमायै० कलशहस्तायै० पूर्णकुम्भधरायै० धरायै० अभीरवे० भैरव्यै० भीमायै० भीरायै० त्रिपुरभैरव्यै० महारुण्डायै० रौद्र्यै० महाभैरवपूजितायै० निर्मुण्डायै० हस्तिन्यै० चण्डायै०करालदशनाननायै० करालायै० विकरालायै० घोरघुर्घुरनादिन्यै० रक्तदन्तायै० ऊर्ध्वकेश्यै० बन्धूककुसुमारुणायै०

कादम्बर्यै० पटासायै० काश्मीर्यै० कुंकुमप्रियायै० क्षान्तये० बहुसुवर्णायै० रतये० बहुसुवर्णदायै० मातङ्गिन्यै० वरारोहायै० मत्तमातङ्गगामिन्यै० हिंसायै० हंसगतये० हंस्यै० हंसोज्ज्वलशिरोरुहायै० पूर्णचन्द्रमुख्यै० श्यामायै० स्मितास्यायै० श्यामकुण्डलायै० मष्यै० लेखिन्यै० लेख्यायै० सुलेखायै० लेखकप्रियायै० शंखिन्यै० शंखहस्तायै० जलस्थायै० जलदेवतायै० कुरुक्षेत्रावनये० काश्यै० मथुरायै० काञ्च्यै० अवन्तिकायै० अयोध्यायै० द्वारकायै०मायायै० तीर्थायै० तीर्थकरप्रियायै० त्रिपुष्करायै० अप्रमेयायै० कोशस्थायै०

तेजोऽसि ... ... धामासि०

**ॐ कोशवासिन्यै स्वाहा ॥७००॥**

ध्यानम्

प्रातःकाले कुमारी कुमुदकलिकया जप्यमालां जपन्ती
मध्याह्ने प्रौढरूपा विकसितवदना चारुनेत्रा विशाला।
सन्ध्यायां वृद्धरूपा गलितकुचयुगे मुण्डमाला वहन्ती
सा देवी दिव्यदेहा हरिहरनमिता पातु नो ह्यादिमुद्रा॥

ॐ कौशिक्यै स्वाहा।

कुशावर्तायै० कौशाम्ब्यै० कोशवर्द्धिन्यै० कोशदायै०

पद्मकोशाक्ष्यै० कुसुमायै० कुसुमप्रियायै० तोतलायै० तुलाकोटये० कूटस्थायै० कोटराश्रयायै० स्वयम्भुवे० सुरूपायै० स्वरूपायै० रूपवर्द्धिन्यै० तेजस्विन्यै० सुभिक्षायै० बलदायै० बलदायिन्यै० महाकोश्यै० महावर्तायै० बुद्धिसदसदात्मिकायै० महाग्रहहरायै० सौम्यायै० विशोकायै० शोकनाशिन्यै० सात्त्विक्यै० सत्त्वसंस्थायै० राजस्यै० रजोवृतायै० तामस्यै० तमोयुक्तायै० गुणत्रयविभाविन्यै० अव्यक्तायै० व्यक्तरुपायै० वेदविद्यायै० शाम्भव्यै० शंकराकल्पिनीकल्पायै० मनःसंकल्पसन्ततये० सर्वलोकमयीशक्तये० सर्वश्रवणगोचरायै० सर्वज्ञानवतीवाञ्छायै०

सर्वतत्त्वानुबोधिन्यै० जागृत्यै० सुषुप्तये० स्वप्नावस्थायै० तुरीयकायै० त्वरायै० मन्दगतये० मन्दायै० मदिरामोदधारिण्यै० पानभूमये० पानपात्रायै० पानदानकरोद्यतायै० आघूर्णारुणनेत्रायै० किञ्चिदव्यक्तभाषिण्यै० आशापूरायै० दीक्षायै० दक्षायै० दीक्षितपूजितायै० नागवल्ल्यै० नागकन्यायै० भोगिन्यै० भोगवल्लभायै० सर्वशास्त्रवतीविद्यायै० सुस्मृतये० धर्मवादिन्यै० श्रुतये० श्रुतिधरायै० ज्येष्ठायै० श्रेष्ठायै० पातालवासिन्यै० मीमांसायै० तर्कविद्यायै० सुभक्तये० भक्तवत्सलायै० सुनाभये० यातनायै० जातये० गम्भीरायै० भाववर्जितायै०

नागपाशधरामूर्तये० अगाधायै० नागकुण्डलायै० सुचक्रायै० चक्रमध्यस्थायै० चक्रकोणनिवासिन्यै० सर्वमन्त्रमयीविद्यायै० सर्वमन्त्राक्षरावलये० मधुस्रवायै० स्रवन्त्यै० भ्रामर्यै० भ्रमरालकायै० मातृमण्डलमध्यस्थायै० मातृमण्डलवासिन्यै० कुमारजनन्यै० क्रूरायै० सुमुख्यै०

तेजोऽसि० ... ... धामासि०

**ॐ ज्वरनाशिन्यै स्वाहा॥८००॥**

ध्यानम्

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नताः स्म परिपालय देवि विश्वम्॥

ॐ अतीतायै स्वाहा।

विद्यमानायै० भाविन्यै० प्रीतिमञ्जर्यै० सर्वसौख्यवतीयुक्तये० आहारपरिणामिन्यै० पञ्चभूतानांनिधानायै० भवसागरतारिण्यै० अक्रूरायै० ग्रहवत्यै० विग्रहायै० ग्रहवर्जितायै० रोहिण्यै०

भूमिगर्भायै० कालभुवे० कालवर्तिन्यै० कलंकरहितानार्यै०
चतुष्षष्ट्यभिधावत्यै० जीर्णायै० जीर्णवस्त्रायै० नूतनायै०
नववल्लभायै० अरजायै० रतये० प्रीतये० रतिरागविवर्द्धिन्यै०
पञ्चवातगतिर्भिन्नायै० पञ्चश्लेष्माशयाधरायै० पञ्चपित्तवतीशक्तये०
पञ्चस्थानविबोधिन्यै० उदक्यायै० वृषस्यन्त्यै० त्र्यहं बहिः
प्रस्त्रविण्यै० रजःशुक्रधराशक्तये० जरायवे० गर्भधारिण्यै०
त्रिकालज्ञायै० त्रिलिङ्गायै० त्रिमूर्तये० त्रिपुरवासिन्यै० अरागायै०
शिवतत्त्वायै० कामतत्त्वानुरागिण्यै० प्राच्यै०अवाच्यै० प्रतीच्यै०
उदीच्यै० विदिग्दिशायै० अहंकृतये० अहंकारायै० बलिमायायै०

बलिप्रियायै० स्रुचे० स्रुवायै० सामिधेन्यै० सश्रद्धायै० श्राद्धदेवतायै० मात्रे० मातामह्यै० तृप्तये० पितृमात्रे० पितामह्यै० स्नुषायै० दौहित्रिण्यै० पुत्र्यै० पौत्र्यै० नप्त्र्यै० शिशुप्रियायै० स्तनदायै०स्तनधारायै०विश्वयोनये० स्तनन्दय्यै० शिशूत्संगधरायै० दोलायै० दोलाक्रीडाभिनन्दिन्यै० उर्वश्ये० कदल्यै० केकायै० विशिखायै० शिखिवर्तिन्यै० खट्वाङ्गधारिण्यै० खट्वायै० बाणपुङ्खानुवर्तिन्यै० लक्ष्यप्राप्तये० कलायै० अलक्ष्यायै० लक्ष्यायै० शुभलक्षणायै०वर्तिन्यै०सुपथाचारायै०परिखायै० खनये० वृतये० प्राकारवलयायै० वेलायै० महोदधौमर्यादायै०

पोषणीशक्तये० शोषणीशक्तये० दीर्घकेश्यै०

तेजोऽसि . . .  . . . धामासि०

**ॐ सुलोमशायै स्वाहा ॥९००॥**

ध्यानम्

रे मूढाः किमयं वृथैव तपसा कायः परिक्लिश्यते
यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्तीक्रियन्ते गृहाः।
भक्तिश्चेदविनाशिनी भगवती पादद्वयी सेव्यता-
मुन्निद्राम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ॥

ॐ ललितायै स्वाहा।

मांसलायै० तन्व्यै० वेदवेदाङ्गधारिण्यै० नरासृक्पानमत्तायै० नरमुण्डास्थिभूषणायै० अक्षक्रीडारतये० शार्यै० शारिकाशुकभाषिण्यै० शाम्बर्यै० गारुडीविद्यायै० वारुण्यै० वरुणार्चितायै० वाराह्यै० मुण्डहस्तायै० दंष्ट्रोद्धृतवसुन्धरायै० मीनमूर्तिधरायै० मूर्तायै० वदन्यायै० प्रतिमाश्रयायै० अमूर्तायै० निधिरूपायै० सालिग्रामशिलाशुचये० स्मृतये० संस्काररूपायै० सुसंस्कारायै० संस्कृतये० प्राकृतायै० देशभाषायै० गाथायै० गीतये० प्रहेलिकायै० इडायै० पिङ्गलायै० पिङ्गायै० सुषुम्णायै०

सूर्यवाहिन्यै० शशिस्त्रवायै० तालुस्थायै० काकिन्यै० अमृतजीविन्यै० अणुरूपायै० बृहद्रूपायै० लघुरूपायै० गुरुस्थिरायै० स्थावरायै० जङ्गमायै० देव्यै० कृतकर्मफलप्रदायै० विषयाक्रान्तदेहायै० निर्विशेषायै० जितेन्द्रियायै० विश्वरूपायै० चिदानन्दायै० परब्रह्मप्रबोधिन्यै० निर्विकारायै० निर्वैरायै० विरतये० सत्यवर्धिन्यै० पुरुषाज्ञायै० भिन्नायै० क्षान्तिःकैवल्यदायिन्यै० विविक्तसेविन्यै० प्रज्ञाजनयित्र्यै० बहुश्रुतये० निरीहायै० समस्तैकायै० सर्वलोकैकसेवितायै० सेवायै० सेवाप्रियायै० सेव्यायै० सेवाफलविवर्द्धिन्यै० कलौकल्किप्रियाकाल्यै०

दुष्टम्लेच्छविनाशिन्यै० प्रत्यञ्चायै० धनुर्यष्टये० खड्गधारायै० दुरानतये० अश्वप्लुतये० वल्गायै० सृणये० सन्मत्तवारणायै० वीरभुवे० वीरमात्रे० वीरसुवे० वीरनन्दिन्यै० जयश्रियै० जयदीक्षायै० जयदायै० जयवर्द्धिन्यै० सौभाग्यसुभगाकारायै० सर्वसौभाग्यवर्द्धिन्यै० क्षेमङ्कर्यै० सिद्धिरूपायै० सत्कीर्तये० पथिदेवतायै० सर्वतीर्थमयीमूर्तये० सर्वदेवमयीप्रभायै० सर्वदेवमयीशक्तये०

तेजोऽसि शुक्रमसि ज्योतिरसि धामासि
प्रियन्देवानामनादृष्टं देवयजनं देवताभ्यस्त्वा
देवताभ्यो गृह्णामि देवेभ्यस्त्वा यज्ञेभ्यो गृह्णामि

**सर्वमङ्गलमङ्गलायै स्वाहा ॥१०००॥**

ॐ शान्तिः शान्तिः शान्तिः ॥

# ॥ श्री इन्द्राक्षीस्तोत्रम्॥

संशोधकः - पण्डित जानकीनाथ कौल 'कमल'।

## ॥ अथ इन्द्राक्षीस्तोत्रम्॥

श्रीगणेशाय नमः

ॐ अस्य श्री इन्द्राक्षीस्तोत्रमन्त्रस्य। पुरन्दर ऋषिः। अनुष्टुप् छन्दः। श्री इन्द्राक्षी भगवती देवता। ह्रीं बीजम्। श्रीं शक्तिः। क्लीं कीलकम्। गायत्री, सावित्री, सरस्वती कवचम्। आत्मनो वाङ्मनः कायोपार्जित पापनिवारणार्थे सकलकामनासिद्ध्यर्थे पाठे विनियोगः।

अथ करन्यासः

ॐ लक्ष्म्यै अङ्गुष्ठाभ्यां नमः। ॐ भुवनेश्वर्यै तर्जनीभ्या नमः। ॐ माहेश्वर्यै मध्यमाभ्यां नमः। ॐ वज्रहस्तायै अनामिकाभ्यां नमः।

ॐ सहस्त्रनयनायै कनिष्ठिकाभ्यां नमः। ॐ इन्द्राक्षी भगवत्यै करतलकरपृष्ठाभ्यां नमः।

एवं षडंगन्यासः

ॐ लक्ष्म्यै हृदयाय नमः। ॐ भुवनेश्वर्यै शिरसे स्वाहा। ॐ माहेश्वर्यै शिखायै वषट्। ॐ सहस्त्रनयनायै नेत्राभ्यां वौषट्। ॐ इन्द्राक्षी भगवत्यै अस्त्राय फट्। (ततः प्रणायामः)

अथ ध्यानम्

इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रधरां शुभाम्।
वामेहस्ते वज्रधरां दक्षिणे चाभयप्रदाम्॥

सहस्त्रनेत्रां सूर्याभां नानालङ्कारभूषिताम्।
प्रसन्नवदनां नित्यामप्सरोगणसेविताम्॥
श्री दुर्गां सौम्यवदनां पाशाङ्कुशधरां पराम्।
त्रैलोक्यमोहनीं देवीं भवानीं प्रणमाम्यहम्॥

(गायत्री) ॐ शचीपतये विद्महे, पाकशासानाय धीमहि,
तन्नो इन्द्रः प्रचोदयात्॥ ३॥

मूल मन्त्र

ॐ ह्रीं श्रीं इन्द्राक्षीं श्रीं पें स्वाहा॥

इन्द्र उवाच

इन्द्राक्षी नाम सा देवी दैवतैः* समुदाहृता।
गौरी शाकम्भरी देवी दुर्गानाम्नीतिविश्रुता॥ १
कात्यायनी महादेवी चन्द्रघण्टा+ महातपा।
गायत्री सा च सावित्री ब्रह्माणी ब्रह्मविदिनी॥२॥
नारायणी भद्रकाली रुद्राणी कृष्णपिङ्गला।
अग्निज्वाला रौद्रमुखी कालरात्रिः तपस्विनी॥३॥
मेघश्यामा सहस्राक्षी विष्णुमाया जलोदरी।

* पठान्तर-देवता + पाठा०-चण्डघण्टा

महोदरी मुक्तकेशी घोररूपा महाबला॥४॥
आनन्दा भद्रजानन्दा रोगहर्त्री शिवप्रिया।
शिवदूती कराली च प्रत्यक्षा परमेश्वरी॥५।
इन्द्राणी चन्द्ररूपा * च इन्द्रशक्तिपरायणा।
महिषासुरसंहर्त्री चामुण्डा गर्भदेवता॥६॥
वाराही नारसिंही च भीमा भैरवनादिनी।
श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती॥ ७॥
अनन्ता विजया पूर्णा मनस्तोषाऽपराजिता।
भवानी पार्वती दुर्गा हैमवत्यम्बिकाऽशिवा॥८॥

* 'चेन्द्ररुपा'-इति केचित्।

शिवा भवानी रुद्राणी शंकरार्धशरीरिणी।
* एतैर्नामपदैर्दिव्यैः स्तुता शक्रेण धीमता॥९॥

## फलश्रुतिः

आयुरारोग्यमैश्वर्यं सुखसम्पत्तिकारकम्।
क्षयापस्मारकुष्ठादि तापज्वरनिवारकम्॥१०॥
शतमावर्तयेद्यस्तु मुच्यते व्याधिबन्धनात्।
आवर्तयेत्सहस्रेण लभते वाञ्छितं फलम्॥११॥
राजावश्यमवाप्नोति सत्यमेव न संशयः।
लक्षमेकं जपेद्यस्तु साक्षाद्देवी स पश्यति॥१२॥

* सदासम्मोहनी देवी सुन्दरी भुवनेश्वरी'—इत्यधिकः पाठः

त्रिकालं पठते नित्यं धनधान्य विवर्धनम्।
अर्धरात्रे पठेत् नित्यं मुच्यते कर्मबन्धनात्॥१३॥
ऐन्द्र-स्तोत्रमिदं पुण्यं जपे तु फलवर्धनम्* ।
विनाशाय तु रोगाणामपमृत्यु हरत्युत॥१४॥
राज्यार्थी लभते राज्यं धनार्थी विपुलं धनम्।
इच्छाकामं तु कामार्थी धर्मार्थी धर्ममव्ययम्॥१५॥
विद्यार्थी लभते विद्यां मोक्षार्थी परमं पदम्।
इन्द्रेण कथितं स्तोत्रं सत्यमेव न संशयः॥१६॥
॥ इति श्री इन्द्राक्षीस्तोत्रं सम्पूर्णम् ॥

* पाठा० जपतः फलमाप्नुयात्।

श्रीमदाद्य शंकराचार्यविरचिता

## गौरीस्तुतिः

ॐ लीलारब्ध-स्थापित-लुप्तखिललोकां
लोकातीतैर् योगिभिरन्तर् हृदि मृग्याम्।
बालादित्य- श्रेणि -समान- द्युतिपुंजां
गौरीं अम्बां अम्बुरुहाक्षीं अहं ईडे॥ १॥
आशा-पाश-क्लेश-विनाशं विदधानां
पादाम्बोज- ध्यान- पराणां पुरुषाणाम्।
ईशीं ईशार्धाङ्गहरां तां तनुमध्याम्॥ गौरीं०॥२॥

प्रत्याहार - ध्यान- समाधि-स्थिति- भाजां
नित्यं चित्ते निर्वृत्ति-काष्ठां कलयन्तीम्।
सत्य- ज्ञानानन्दमयीं तां अभिवन्ध्याम्॥ गौरीं० ॥ ३ ॥
चन्द्रापीडानन्दित- मन्द -स्मित- वक्त्रां
चन्द्रापीडालङ्कृत लोलालकभाराम्।
इन्द्रोपेन्द्राभ्यर्चित- पादाम्बुज- युग्माम्॥ गौरी० ॥४॥
नानाकारैः शक्तिकदम्बैर्भुवनानि
व्याप्य स्वैरं क्रीडति याऽसौ स्वंयमेव।
कल्याणीं तां कल्पलतामानति-भाजाम्॥गौरीं ॥५॥

मूलाधारात् उत्थितवन्तीं विधि-रन्ध्रं
सौरं चान्द्रं धाम विहाय ज्वलिताङ्गीम्।
ध्येयां सूक्ष्मां सूक्ष्मतनुं तां तडित्- आभाम्॥ गौरीं० ॥६॥
आदि क्षान्ताम् अक्षर- मूर्त्या विलसन्तीं
भूते भूते भूत-कदम्बं प्रसवित्रीम्।
शब्द- ब्रह्मानन्दमयीं तां प्रणवाख्याम्॥ गौरीं० ॥७॥
यस्या कुक्षौ लीनम्-अखण्डं जगत् अण्डं
भूयो भूयः प्रादुर् अभूत्-अक्षतम्-एव
भर्त्रा सार्धं तां स्फटिकाद्रौ विहरन्तीम्॥ गौरीं० ॥८॥

यस्याम् एतत् प्रोतम् अशेषं मणिमाला
सूत्रे यत्-वत् क्वापि चरं क्वाप्यचरं च।
तां अध्यात्म-ध्यान-पदव्या-गमनीयाम्॥ गौरीं० ॥९॥
नित्यः सत्यो निष्कल एको जगत् ईशः
साक्षी यस्याः सर्ग-विधौ संहरणे च।
विश्वत्राण क्रीडनशीलां शिव-पत्नीम्॥ गौरीं० ॥१०॥

प्रातः काले भावविशुद्धः प्रणिदानात्
भक्त्या नित्यं जल्पति गौरी-दशकं यः।
वाचां सिद्धिं सम्पदम्- उच्चैः शिव-भक्तिं
तस्यावश्यं पर्वत-पुत्री विदधाति॥११॥

इति गौरीस्तुतिः

## महामाहेश्वर आचार्य अभिनवगुप्तपाद विरचिता

## अम्बिका स्तुतिः

तव च का किल न स्तुतिर्-अम्बिके
सकल शब्दमयी किल ते तनुः।
निखिलमूर्तिषु मे भवत्-अन्वयो
मनसिजासु बहिः प्रसरासु च॥
इति विचिन्त्य शिवे! शमित्-अशिवे!
जगति जातम् अयत्नवशात् इदम्।
स्तुति जप अर्चन चिन्तन वर्जिता
न खलु काचन कालकलाऽस्ति मे॥

शुभं भवतु सर्वेषाम्

ॐ तत्सत्

उपनिषद्-पाठ

(श्वेताश्वतरोपनिषद्-अध्यात्मयोग)

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि-नावधीतमस्तु। मा विद्विषावहै।

ॐ शान्तिः! शान्तिः! शान्तिः!

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्।
पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यम्॥
न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिवश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥
न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्।
स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः॥
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥

एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरा-स्तेषां सुखं शाश्वतं नेतरेषाम्॥
नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।
तत् कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्व पाशैः॥
न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥

एको हँसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संन्निविष्टः।
तमेव विदित्वातिमृत्युमेति नान्यः पन्थः विद्यतेऽयनाय॥
यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तँ ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥

# शान्ति पाठ

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यंकरवावहै। तेजस्वि-नावधीतमस्तु। मा विद्विषावहै।

ॐ शान्तिः! शान्तिः! शान्तिः!

( पूर्ण ब्रह्म परमात्मन्! आप हम दोनों, गुरु-शिष्य, की साथ-साथ रक्षा करें,हम दोनों का साथ साथ पालन करें, हम दोनों ही साथ साथ शक्ति प्राप्त करें, हम दोनों की पढी हुई विद्या तेजोमयी हो, हम दोनों परस्पर द्वेष न करें।)

कृष्णयजुर्वेदीय श्वेताश्वतरोपनिषद् से

ॐ

